# मृतसंजीवन स्तोत्रम्

एवं आराध्य गौरीशं देवं मृत्युन्जयं ईश्वरम् ।
मृतसंजीवनं नाम्ना कवचं प्रजपेत् सदा ॥ 1 ॥

सारात् सारतरं पुण्यं गुह्याद् गुह्यतरं शुभम् ।
महादेवस्य कवचं मृतसंजीव नामकम् ॥ 2 ॥

समाहितमना भूत्वा शृणुष्व कवचं शुभम् ।
शृत्वा एतद् दिव्य कवचं रहस्यं कुरु सर्वदा ॥ 3 ॥

वराभयकरो यज्वा सर्वदेव निषेवितः ।
मृत्युंजयो महादेवः प्राच्यां मां पातु सर्वदा ॥ 4 ॥

दधानः शक्तिं अभयां त्रिमुखं षड्भुजः प्रभुः ।
सदाशिवो अग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥ 5 ॥

अष्टदश भुजोपेतो दण्ड अभयकरो विभुः ।
यमरूपि महादेवो दक्षिणस्यां सदावतु ॥ 6 ॥

खड्ग अभयकरो धीरो रक्षोगण निषेवितः ।
रक्षोरूपी महेशो मां नैऋत्यां सर्वदावतु ॥ 7 ॥

पाशाभयभुजः सर्वरत्नाकर निषेवितः ।
वरुणात्मा महादेवः पश्चिमे मां सदावतु ॥ 8 ॥

गदाभयकरः प्राणनायकः सर्वदागतिः ।
वायव्यां मारुतात्मा मां शंकरः पातु सर्वदा ॥ 9 ॥

शंख अभय करस्थो मां नायकः परमेश्वरः ।
सर्वात्मा अंतरदिग्भागे पातु मां शंकरः प्रभुः ॥ 10 ॥

शूल अभयकरः सर्वविद्यानां अधिनायकः ।
ईशानात्मा तथैशान्यां पातु मां परमेश्वरः ॥ 11 ॥

ऊर्ध्वभागे ब्रह्मरूपी विश्वात्मा अधः सदावतु ।
शिरो मे शंकरः पातु ललाटं चंद्रशेखरः ॥ 12 ॥

भूमध्यं सर्वलोके शस्त्रिणेत्रो लोचने अवतु ।
भ्रूयुग्मं गिरिशः पातु कर्णौ पातु महेश्वरः ॥ 13 ॥

नासिकां मे महादेव ओष्ठौ पातु वृषध्वजः ।
जिह्वां मे दक्षिणामूर्तिर् दन्तान्मे गिरिशो अवतु ॥ 14 ॥

मृत्युंजयो मुखं पातु कण्ठं मे नागभूषणः ।
पिनाकि मत्करौ पातु त्रिशूलि हृदयं मम ॥ 15 ॥

पंचवक्त्रः स्तनौ पातु उदरं जगदीश्वरः ।
नाभिं पातु विरूपाक्षः पार्श्वौ मे पार्वतीपतिः ॥ 16 ॥

कटद्वयं गिरीशौ मे पृष्ठं मे प्रमथाधिपः ।
गुह्यं महेश्वरः पातु ममोरू पातु भैरवः ॥ 17 ॥

जानुनी मे जगद्धर्ता जंघे मे जगदंबिका ।
पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥ 18 ॥

गिरिशः पातु मे भार्यां भवः पातु सुतान्मम ।
मृत्युंजयो मम आयुष्यं चित्तं मे गणनायकः ॥ 19 ॥

सर्वांगं मे सदा पातु कालकालः सदाशिवः ।
एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥ 20 ॥

मृतसंजीवनं नाम्ना महादेवेन कीर्तितम् ।
सहस्रावर्तनं च अस्य पुरश्चरणमीरितम् ॥ 21 ॥

यः पठेत् शृणुयान् नित्यं श्रावयेत्सु समाहितः ।
सकालमृत्युं निर्जित्य सदायुष्यं समश्नुते ॥ 22 ॥

हस्तेन वा यदा स्पृष्ट्वा मृतं संजीवयत्यसौ ।
आधयोव्याध्यः तस्य न भवन्ति कदाचन ॥ 23 ॥

कालमृयुमपि प्राप्तमसौ जयति सर्वदा ।
अणिं आदि गुणैश्वर्यं लभते मानव उत्तमः ॥ 24 ॥

युद्धारंभे पठित्वेदं अष्टाविशतिवारकम् ।
युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न दृश्यते ॥ 25 ॥

न ब्रह्मादीनि च अस्त्राणि क्षयं कुर्वन्ति तस्य वै ।
विजयं लभते देव युद्धमध्ये अपि सर्वदा ॥ 26 ॥

प्रातर् उत्थाय सततं यः पठेत् कवचं शुभम् ।
अक्षय्यं लभते सौख्यं इह लोके परत्र च ॥ 27 ॥

सर्व व्याधि विनिर्मृक्तः सर्व रोग विवर्जितः ।
अजर अमरणो भूत्वा सदा षोडश वार्षिकः ॥ 28 ॥

विचरव्य अखिलान् लोकान् प्राप्य भोगांश्च दुर्लभान् ।
तस्मात् इदं महागोप्यं कवचं समुदाहृतम् ॥
मृतसंजीवनं नाम्ना देवतैरपि दुर्लभम् ॥ 29 ॥

॥ इति वसिष्ठ कृत मृतसंजीवन स्तोत्रम् ॥